प्रयोजनं चेत् विचारमर्हतीतिन्यायः। ३०६ समुद्रवृष्टिन्यायः। ३०७ सम्भवत्येकवाक्यत्वे वाक्यभेदो न चेष्यते इतिन्यायः। ३०८ सर्व्वं वाक्यं सावधारणमितिन्यायः। ३०९ सर्व्वं कार्य्यं सकारणकमितिन्यायः। ३१० सर्व्वविशेषणां साधारणमितिन्यायः। ३११ सर्व्वशाखाप्रत्ययमेकं कर्म्मेतिन्यायः। ३१२ साक्षात्प्रकृतमितिन्यायः। ३१३ साधुमैत्रीन्यायः। ३१४ सार्व्वजनीनतुल्यायव्ययन्यायः। ३१५ सावकाशनिरवकाशयोर्निरवकाशो बलीयानितिन्यायः। ३१६ सिंहमृगन्यायः। ३१७ सिंहावलोकन्यायः। ३१८ सुप्तजनिन्दतिन्यायः। ३१९ सुभगाभिक्षुकन्यायः। ३२० सुन्दोपसुन्दन्यायः। ३२१ सूत्रशाटिकान्यायः। ३२२ सोपानारोहणन्यायः। ३२३ स्तनन्धयन्यायः। ३२४ स्थालीपुलाकन्यायः। ३२५ स्थावरजङ्गमविषन्यायः। ३२६ स्थूणानिखनन्यायः। ३२७ स्थूलारुन्धतीन्यायः। ३२८ स्फटिकलौहित्यन्यायः। ३२९ स्वकरकुठारन्यायः। ३३० स्वपक्षहानिकर्तृत्वात् स्वकुलाङ्गारतां गत इतिन्यायः। ३३१ स्वप्नव्याघ्रन्यायः। ३३२ स्वशिशुमपि पुष्यन्तमितिन्यायः। ३३३ स्वामिभृत्यन्यायः। ३३४ हस्तामलकन्यायः। इति श्रीरामदयालुशर्म्मरघुनाथेन विरचितो लौकिकन्यायसंग्रहः॥ )

न्यायसारिणी, स्त्री, ( न्यायं सरतीति। सृ+णिनि+ङीप्। ) युक्तिपूर्व्वककर्म्मकारिणी तत्पर्य्यायः। लुब्धी २। इति त्रिकाण्डशेषः॥

न्यायी, [ न् ] त्रि, ( न्यायोऽस्यास्तीति। न्याय+इनिः। ) न्यायवान्। न्यायोऽस्यास्तीत्यर्थे इन्प्रत्ययनिष्पन्नः॥

न्याय्यं, त्रि, ( न्यायादनपेतम्। न्याय+"धर्म्मपथ्यर्थन्यायादनपेते।" ४। ४। ९२। इति यत्। ) न्यायादनपेतम्। (न्याये भवः। न्यायादागतो वा। "दिगादिभ्यो यत्।" ४। ३। ५४। इति यत्। ) न्यायागतधनादिः। इति भरतः॥ तत्पर्य्यायः। युक्तम् २ औपयिकम् ३ लभ्यम् ४ भजमानम् ५ अभिनीतम् ६। इत्यमरः। २। ८। २५॥ क्रमोचितम् ७। इति शब्दरत्नावली॥ ( यथा, मनुः। २। १५२।
"देवाश्चैतान् समेत्योचुर्न्याय्यं वः शिशुरुक्तवान्॥")

न्यासः, पुं, ( न्यस्यत इति। नि+अस+घञ्। ) उपनिधिः। स्थाप्यद्रव्यम्। इत्यमरः। २। ९। ८९॥ अस्य विवरणं निक्षेपशब्दे द्रष्टव्यम्॥ * ॥ विन्यासः। अर्पणम्। यदाह कालिदासः।
"पदन्यासैरासीत् कमलपरिपूर्णा वसुमती
दृगान्तालैरिन्दीवरमयमभूदम्बरतलम्।
इदं याचे किञ्चिद्विरचय वचः सौरमधुरं
धरायामप्यास्तां विधुमुखि! सुधायाः परिचयः॥"
त्यागः। यथा, श्रीभगवद्गीतायां १८ अध्याये।
"काम्यानां कर्म्मणां न्यासं सन्न्यासं कवयो विदुः।
सर्व्वकर्म्मफलत्यागं प्राहुस्त्यागं विचक्षणाः॥"
कार्श्निकाश्यपाविनिस्त्वष्टान्यायप्रविशेषः। यथा, माघे। २। ११२।
"अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना।
शब्दविद्येव नो भाति राजनीतिरपस्पशा॥"
सन्न्यासः। यथा,—
"वक्ष्ये विविदिषान्यासं विद्वन्न्यासं च भेदतः।
हेतू विदेहमुक्तेश्च जीवन्मुक्तेश्च तौ क्रमात्॥"
इति जीवन्मुक्तिप्रथमविवेकः॥ *॥
पूजाजपादेः प्राक्करणीयमन्त्रविशेषार्थदेवतान्तर्व्वहिर्व्वर्णादिविन्यासः। तन्न्यासकालो यथा,
"प्रातःकालेऽथवा पूजाकाले होमकर्म्मणि।
जपकालेऽपि वा तेषां विनियोगः पृथक् पृथक्।
पूजाकाले समस्तं वा कुर्य्यात् साधकसत्तमः॥"
इति योगिनीहृदयम्॥ *॥
अथ मातृकान्यासः। अस्य मातृकामन्त्रस्य ब्रह्मर्षिर्गायत्री छन्दो मातृकासरस्वती देवता हलो वीजानि स्वराः शक्तयो लिपिन्यासे विनियोगः। शिरसि ॐ ब्रह्मणे ऋषये नमः। मुखे ॐ गायत्रीच्छन्दसे नमः। हृदि ॐ मातृकासरस्वत्यै देवतायै नमः। गुह्ये ॐ व्यञ्जनेभ्यो वीजेभ्यो नमः। पादयोः स्वरेभ्यः शक्तिभ्यो नमः। तथा च ज्ञानार्णवे।
मातृकां शृणु देवेशि! न्यसेत् पापनिकृन्तनीम्।
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते॥
देवता मातृकादेवी वीजं व्यञ्जनसञ्चयम्।
शक्तयस्तु स्वरा देवि! षडङ्गन्यासमाचरेत्॥
ततः षडङ्गन्यासः।
अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः।
इं चं छं जं झं ञं ईं तर्ज्जनीभ्यां स्वाहा।
उं टं ठं डं ढं णं ऊं मध्यमाभ्यां वषट्।
एं तं थं दं धं नं ऐं अनामिकाभ्यां हुम्।
ओं पं फं बं भं मं औं कनिष्ठाभ्यां वौषट्।
अं यं रं लं वं शं षं सं हं ळं क्षं अः करतलपृष्ठाभ्यां फट्। एवं हृदयादिषु। अं कं खं घं ङं आं हृदयाय नमः। इत्यादि।
तथा च ज्ञानार्णवे।
अं आं मध्ये कवर्गन्तु इं ईं मध्ये चवर्गकम्।
उं ऊं मध्ये टवर्गन्तु एं ऐं मध्ये तवर्गकम्॥
ओं औं मध्ये पवर्गन्तु विन्दुयुक्तं न्यसेत् प्रिये।
अनुस्वारविसर्गान्तर्यशवर्गौ सलक्षकौ॥
हृदयन्तु शिरो देवि! शिखा कवचकं तथा।
नेत्रमन्त्रं न्यसेत् ङेऽन्तं नमःस्वाहा क्रमेण तु॥
वषट् हुं वौषडन्तञ्च फडन्तं योजयेत् प्रिये!।
षडङ्गोऽयं मातृकायाः सर्व्वपापहरः स्मृतः॥
अथान्तर्मातृकान्यासः।
अकारादिषोडशस्वरान् सविन्दून् षोडशदलकमलं कण्ठमूले न्यसेत्। ककारादिद्वादशवर्णान् सविन्दून् द्वादशदलकमले हृदये न्यसेत्। डकारादिदशवर्णान् सविन्दून् दशदलकमले नाभौ न्यसेत्। बकारादिषड्वर्णान् सविन्दून् षड्दलकमले लिङ्गमूले न्यसेत्। वकारादिचतुरो वर्णान् सविन्दून् चतुर्द्दलकमले मूलाधारे न्यसेत्। हक्षवर्णौ सविन्दू द्विदलकमले भ्रूमध्ये न्यसेत्। तथा च ज्ञानार्णवे।
"कण्ठपद्माम्बुजे कण्ठे स्वरान् षोडश विन्यसेत्।
द्वादशच्छदहृत्पद्मे कादीन् द्वादश विन्यसेत्॥
दशपत्राम्बुजे नाभौ डकारादीन्न्यसेद्दश।
षट्पत्रमध्ये लिङ्गस्थे वकारादींन्यसेच्च षट्॥
आधारे चतुरो वर्णान् न्यसेद्वादीन् चतुर्द्दले।
हक्षौ भ्रूमध्यगे पद्मे द्विदले विन्यसेत् प्रिये॥"
अगस्त्यसंहितायाम्।
"एकैकवर्णमेकैकपद्मान्ते विन्यसेत् प्रिये।
एवमन्तः प्रविन्यस्य मनसातो बहिर्न्यसेत्॥"
वैष्णवे तु।
"एकैकवर्णमुच्चार्य्य मूलाधाराच्छिरोऽन्तकम्।
नमोऽन्तमिति विन्यास आन्तरः परिकीर्त्तितः॥
अथान्तर्मातृकान्यासो मूलाधारे चतुर्द्दले।
सुवर्णाभे वशषसचतुर्व्वर्णविभूषिते॥
षड्दले वैद्रुतनिभे स्वाधिष्ठानेऽनलत्विषि।
बभमयरलैर्युक्ते वर्णैः षड्भिश्च सुव्रते।
मणिपूरे दशदले नीलजीमूतसन्निभे।
डादिफान्तदलैर्युक्ते विन्द्वङ्गाचितमस्तकैः॥
अनाहते द्वादशारे प्रवालरुचिसन्निभे।
कादिठान्तदलैर्युक्ते योगिनां हृदयङ्गमे॥
विशुद्धे षोडशदले धूम्राभे स्वरभूषिते।
आज्ञाचक्रे तु चन्द्राभे द्विदले हक्षलाञ्छिते॥
सहस्रारे हिमनिभे सर्व्ववर्णविभूषिते।
अकथादित्रिरेखात्महलक्षत्रयभूषिते॥
तन्मध्ये परविन्दुञ्च सृष्टिस्थितिलयात्मकम्।
एवं समाहितमना ध्यायेन्न्यासोऽयमान्तरः॥" *॥
अथ वाह्यमातृकान्यासः।
अस्या ध्यानं यथा,—
"पञ्चाशल्लिपिभिर्विभक्तमुखदोःपन्मध्यवक्षःस्थलां
भास्वन्मौलिनिबद्धचन्द्रसकलामापीनतुङ्गस्तनीम्।
मुद्रामक्षगुणं सुधाढ्यकलसं विद्याञ्च हस्ताम्बुजै-
र्विभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये॥"
एवं ध्यात्वा न्यसेत्। तत्राङ्गुलिनियमस्तन्त्रे।
"ललाटे नासिकामध्ये विन्यसेन्मुखपङ्कजे।
तर्ज्जनी मध्यमानामा वृद्धानामे च नेत्रयोः॥
अङ्गुष्ठं कर्णयोर्न्यस्य कनिष्ठाङ्गुष्ठकौ नसोः।
मध्यास्तिस्रो गण्डयोश्च मध्यमामोष्ठयोर्न्यसेत्॥
अनामां दन्तयोर्न्यस्य मध्यमामुत्तमाङ्गके।
मुखेऽनामां मध्यमाञ्च हस्तपादेषु पार्श्वयोः॥
कनिष्ठानामिकामध्यास्तास्तु पृष्ठे च विन्यसेत्।
ताः साङ्गुष्ठा नाभिदेशे सर्व्वाः कुक्षौ च विन्यसेत्॥
हृदये च तलं सर्व्वमंसयोश्च ककुत्स्थले।
हृत्पूर्व्वं हस्तपत्कुक्षिमुखेषु तलमेव च॥
एतास्तु मातृकामुद्राः क्रमेण परिकीर्त्तिताः।
अज्ञात्वा विन्यसेद्यस्तु न्यासः स्यात्तस्य निष्फलः॥"
गौतमीये
"ललाटमुखवृत्ताक्षिश्रुतिघ्राणेषु गण्डयोः।
ओष्ठदन्तोत्तमाङ्गास्यदोःपत्सन्ध्यग्रकेषु च॥

षड़न्यासः १ । श्रीविद्याविषये वशिन्यादि १ मा-योन्यात्मक २ पीठ ३ तत्त्व ४ पञ्चदशी ५ षोड़शी ६ संहार ७ स्थिति ८ सृष्टि ९ नाद १० षोढ़ा ११ गणेश १२ ग्रह १३ नक्षत्र १४ योगिनी १५ राशि १६ त्रिपुरा १७ षोड़श-नित्या १८ कामरति १९ सृष्टिस्थिति २० प्रकट-योगिनी २१ आयुध २२ न्यासाः । तार-विषये रुद्र १ ग्रह २ लोकपाल ३ न्यासाः । एतेषां प्रमाणानि तन्त्रसारादौ द्रष्टव्यानि ॥

न्युङ्खः, पुं, ( न्युङ्ख्यते इति । नि + उख गतौ + घञ् । ) सामवेदे नियतप्रणवषट्कम् । दीर्घ-वानयमिति नयनानन्दः । इत्यमरभरतौ ॥ सम्यक् । मनोज्ञः । इति मेदिनी । खे, २ ॥

न्युब्जं, क्ली, ( न्युब्जति अधोमुखीभवतीति । नि + उब्ज + अच् । ) कर्म्मरङ्गफलम् । इति मेदिनी । जे, १२ ॥ आज्यादिपात्रभेदः । इति शब्दरत्नावली ॥ तथा च गोभिलः । प्रथमे पात्रे संस्रवान् सम-वनीय पात्रं न्युब्जं कुर्य्यात् पितृभ्यः स्थान-मसीति । प्रथमे पात्रे पितृपात्रे । संस्रवान् पितामहादिपात्रार्घपात्रस्थशेषजलानि । समव-नीय क्रमेण स्थापयित्वा तत्पात्रस्य प्रपितामह-पात्रेणाच्छादनमाह शौनकः । प्रपितामह-पात्रेण पिधाय प्रतिष्ठापयतीति । याज्ञवल्क्ये-नापि तत्पात्र[illegible] पात्रा-न्तरेण पिधानम[illegible] याज्ञ-वल्क्यः ।

"दत्त्वार्घ्यं संस्रवां[illegible]धानतः ।
पितृभ्यः स्थानम[illegible]रोत्तथः ॥"

विधानतः यथापूर्व[illegible] । तेन प्रपितामहपात्रेणाच्छा[illegible] कर्द्दमक्ष-मवस्थितं न्युब्ज[illegible] । पितृ-पात्रे निधा[illegible] [illegible]षेत् । इति मत्स्यपुराणवचने[illegible]तोपस्थापित-कर्त्तव्यांमपार्श्वं [illegible] इति श्राद्धतत्त्वम् ॥

न्युब्जः, पुं, ( नि + [illegible] । ) दर्भमयस्रुक् । इति मेदिनी । जे, १२ ॥ ( यथा,—

"प्रयनासन्न[illegible] दर्शनम् ।
न्युब्जानामिव[illegible] मशोभनम् ॥"

इति दशमे [illegible] । ६ । २३ ॥ )

कुशः । स्रुक् । इति [illegible] ॥

न्युब्जः, त्रि, ( न्युब्जति [illegible]भवतीति । नि + उब्ज + अच् । ) [illegible] अधोमुखः । इति मेदिनी । जे, १२ ॥ [illegible] हरिवंशे । ६१ । ६ ।

"स तत्रैकेन पादेन [illegible] पर्य्यवर्त्तयत् ।
न्युब्जं पृथिव्याः [illegible] [illegible]गार च वराह च ॥")

रुग्ना [illegible] । [illegible] २ । ६ । ६१ ॥

रोगेण वक्रीभूतपृष्ठाधोमुखपुरुषादिः । इति भरतः ॥

न्युब्जखड्गः, पुं, ( न्युब्जः खड्गः । ) कुब्जखड्गः । बाँका तरवार इति भाषा ॥ तत्पर्य्यायः । कटील्लः २ । इति त्रिकाण्डशेषः ॥

न्यूनं, त्रि, ( न्यूनयति । नि + ऊन परिहाणौ + अच् । ) गर्ह्यम् । ( यथा, महाभारते । १३ । १४३ । ४६ ।

"एतैः कर्म्मफलैर्द्देवि ! न्यूनजातिकुलोद्भवः ।
शूद्रोऽप्यागमसम्पन्नो द्विजो भवति संस्कृतः ॥")

ऊनम् । इत्यमरः । ३ । ३ । १२७ ॥ ( यथा, मनुः । ८ । २०३ ।

"नान्यदन्येन संसृष्टरूपं विक्रयमर्हति ।
न चासारं न च न्यूनं न दूरे न तिरोहितम् ॥")

न्यूनपञ्चाशद्भावः, पुं, ( न्यूनपञ्चाशतः ऊनपञ्चा-शद्वायूनां भावो यत्र । ) ऊनपञ्चाशद्भावः । पागल इत्यर्थः । यथा,—

"उदीरितन्द्रियो धाता वीक्षाञ्चक्रे यदात्मजाम् ।
तदैव न्यूनपञ्चाशद्भावा जाताः शरीरतः ॥"

इति कालिकापुराणे द्वितीयाध्यायः ॥

नृस्थिमाली, [ न् ] पुं, ( नृणामस्थिमाला नृस्थि-माला सा अस्त्यस्येति । इनिः । ) शिवः । इति त्रिकाण्डशेषः ॥ नरास्थिमालाविशिष्टे, त्रि ॥